# विषयसूचिका







स्वतन्त्रभारतमातः !

स्वतन्त्रभारतमातः ! ख्याते !
स्वतन्त्रभारतमातः !

अनन्तकलाविलसितमूर्ते !
दिगन्त विश्रुतघनकीर्ते !
प्रशान्तभावभरितक्षात्रे !
नितान्तरुचिरवरंगोत्रे ! ॥ स्वतंत्र ॥

कन्याकुमारिकांचितपादे !
गौतमीपरिष्कृतकटिभागे !
गंगायमुनाघनहारे !
हिमगिरिघटित विकट मकुटे ! ॥ स्वतंत्र ॥

सर्वसस्यगणधारिणि !
निखिलवातावरणमोदिनि !
सकलमतसहनपावनि !
सेवेत्वां अस्मत्स्वामिनि ! ॥ स्वतंत्र ॥



# सम्पादकीयम्

भाषासामरस्य सम्पादनाय भारतसर्वकारेणारब्धः प्रयत्नः फलभाग्भविष्यतीति नैव द्योतते। हिन्दीभाषाव्यतिरेकिणां दाक्षिणात्यानां तोषाय "उदीच्यैः या काचन दक्षिणभाषा अवश्यमध्येतव्या" इति सूचना न अर्थकरी भविष्यति। अनेन निर्णयेन न दाक्षिणात्या एव केवलं औत्तराहा अपि निरुत्सुका भविष्यन्ति। इतःपूर्वं दाक्षिणात्यैरेव परभाषाभ्यासनिरुत्सुकता अनुभूता, इतः परं सा औत्तराहैरप्यनुभविष्यते। २९–१–६४ दिनीयायां आन्ध्रपत्रिकायां पठितं यत् त्रिशिरः रीसमीपे चिन्नसामिनामा कश्चन हिन्दीमसहमानः आत्मानं अहत् इति। एकस्य रोगस्य चिकित्सायां दत्तमौषधं अन्यमपि रोगं जनयेद्यदि किं तेन प्रयोजनम्?

अतः प्रस्तुतविधाने दोषविशेषं भावयित्वा निर्दुष्टः फलकारी यशस्करश्च मार्गः अनुसर्तव्यः।

तत्र अमोघः मार्गः संस्कृतस्य राजभाषात्वपदप्रतिष्ठैव। संस्कृतं न एकस्य प्रान्तस्य भाषा भवति। सर्वप्रान्तानामपि समानतयावर्तते। व्याकरणबद्धा एकथैव सर्वत्र विद्योतते। सकलप्रान्तेषु तज्ज्ञाः विद्यन्ते। सांकेतिकपदकल्पनं च तत्र सुलभं भवति। अत्रापि इयमाशंका भवेत्-यत् इयमपि भाषा पंडितानां ब्राह्मणानां सौकर्याय भवेत् इतरेषां न भवेत् इति। तथानैव आलोचनीयम्। माध्यमिकोन्नतमहोन्नतपाठशालासु क्रमशः उत्तीर्णानामेव उद्योगादि सौविध्यकल्पने न प्राचीनानां प्रवेशो भवति। ब्राह्मणा अब्राह्मणाश्च सममेव उपर्युपर्यागमिष्यन्ति कक्ष्यासु। तेन सर्वेषां सौविध्यं एकरूपतयैव भविष्यति।

पाठशालासु च दृढाभ्यास (Intenseive study) विभागस्थाने संस्कृतस्य स्थापनेन च कालसौकर्यं भविष्यति। इदानीं सर्वत्र प्रथमभाषामेव सामान्यतः दृढाभ्यासविभागत्वेन स्वीकुर्वन्ति विद्यार्थिनः। तेन न किमपि प्रयोजनं भवतीति सर्वविदितं रहस्यमेतत्। तत्र संस्कृतग्रहणे न केवलं संस्कृतस्य अभ्यासः भवति अपितु देशभाषायाः परिशुद्धिः पटुता च भवति।

एवं करणेन सर्वेपि संस्कृतज्ञाः देशभाषाभिज्ञाः भविष्यन्ति। प्राचीनानां उद्योगेषु अवकाशो न भवति। भारतदेशस्य यशः गौरवं च अभिवर्धते।

परस्परसंदेहादिकं च दूरीकृतं भवति।

यद्यपि बहो:कालात, तत्रापि गान्धीमुखात् प्रचारिताया हिन्दीभाषाया:, बहुकालधनव्ययेन उन्नीयमानाया: प्रहाणं कष्टतरमेव तथापि दोषदर्शने अपायदर्शने, अन्यथा सुलभोपायदर्शने प्राचीना अपि सिद्धान्ता: परिवर्तनीया एव भवन्ति। एव मेव खलु पाकस्थानपृथक्करणं आन्ध्रप्रदेशस्थापनं इत्यादिकं सर्वकार: कृतवान्। तद्वदेव कालानुगुणतया सिद्धान्तमपि परावर्तयेच्चेन्नैतद्दोषाय, अपितु गुणायैव अपरिवर्तने एव दोषा: अनुभूयेरन्।

संस्कृतभाषाया: राष्ट्रभाषास्थानप्रापणाय पुनरपि महान् काल: महती च धनराशि: आवश्यकौ इति न चिन्तयितव्यम्। हिन्दीभाषानिर्वाहार्थं कृते व्यये काले च अर्धभागेनैवेयं सर्वांगमी भविष्यति। अपि च हिन्द्यै सम्पादितानि सर्वाण्यपि अंगानि अत्र उपयोज्यन्ते। अस्या: संस्कृतभाषाया: सहभाषात्वांगीकारमात्रं प्रकटीकृत्य पश्यन्तु विज्ञा: एतस्या: विलासम्।

तत्र तत्र समावेशै: उपन्यासै: सहायोद्घोषणै: च न किमपि प्रयोजनं भवति। कायेन मनसा वाचा च प्रयतन्तां तदुन्नत्यै। पोषयतु प्राचीना: संस्था:, शोधयन्तु बोधनदोषान्, प्रवेशयन्तु नवीनपद्धती: प्रचारे। उद्योगेषु प्रथमत: भारतसर्वकरीयेषु अनन्तरं प्रादेशिकेषु च संस्कृतं अनुबन्धयोग्यतां प्रकाशयन्तु, तत: पश्यन्तु यादृशी चेतना, यादृशी विज्ञता, यादृशी शक्ति:, यादृशी च युक्ति: प्रजानां बहिर्भविष्यति इति। जयतु संस्कृतम्॥





## कुतुबमीनारस्य वास्तविकगाथा

देहल्यां विद्यमानः कुतुबमीनारः न कुतुबुद्दीनेन निर्मितः। २८० क्री. पू. वर्षे समुद्रगुप्तेन निर्मितस्य एकस्याः प्रयोगशालायाः केन्द्रस्तूपोयम्। अस्य पुरातनं नाम विष्णुध्वज इति। स्तूपसमीपस्थे अयःस्तम्भे इदमेव नाम अद्यापि विद्यते। बद्धस्य जन्मदिनं प्रत्यपि ४८ वादाः सन्ति। सिंहलीयाः तत्र ५४३ क्री. पू. इति, चैनीयाः ४८३ क्री. पू. इति। यथार्थतः सः १८७३ क्री. पू. इति तस्य निर्वाणं च १७९३ क्री. पू. वत्सरे आसीदिति, चरित्रपरिशोधकाः यं. यस्. आने, डि. यस्. त्रिवेदी, दशरथशर्मा च वदन्ति। अस्मच्चरित्रे आंग्लेयैः अनेकान्यसत्यानि प्रकटितानि तदनुयायिभिश्चानुमोदितानि। तत्र भारतसर्वकारेण सत्यचरित्रग्रथनाय प्रयत्नः आस्थेयः।



## अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य

# २७ तमं अधिवेशनम्



इदं अधिवेशनं गाजियाबाद-नगरे जनवरि १, २, ३ तिथिषु महावैभवेन निर्वृत्तमभवत्। भारत-देशस्य विविधप्रान्तेभ्यः असंख्याकाः प्रतिनिधयः तत्र समुपस्थिताः। श्रीआनन्दवल्लभशास्त्री सरायतः, श्री रजनीकान्तशर्मा, श्री गधारमणोपाध्यायः (U. P) श्रीनिवासशास्त्री कुरुक्षेत्रतः, उदयवीरशास्त्री गाजियाबादतः, श्रीविद्याधरशास्त्री बिकनेरात् श्री व्रजनन्दनमिश्रः, श्री चन्द्रदेवो वाद्यवाचस्पतिः, रङ्गनाथरामकृष्णदेशपांडे, विनायकवासुदेवपरंजपे, स्वामी ब्रह्मानन्दतीर्थः मण्डलेश्वरतः वासुदेवत्रिवेदी वाराणासीतः, बाळाचार्यवरखेडकरः सोलापूरात् हरिप्रसाद छगनलालभट्टेसःबडोदात्, बि.एल् षाण्भोग् वरोडातः, त्रिलोकचन्द्रशर्मा मीरठात्, रामेश्वरतिवासी दतिमातः रामचन्द्रयत्ता, यं. पि. शर्मा अस्सामात्, श्री लक्ष्मणशास्त्री, नेति सुब्बरायशास्त्री, आ. वरदराजः, मुनिरेड्डिः इति आन्ध्रदेशीयाः। एतानि आगतेषु महाभागेषु केषांचन शुभनामानि।

तत्र प्रथमदिने श्री N. V. गाड्गिलस्य आध्यक्ष्येण विषयनिर्वाचनसमावेशः, ब्रह्मर्षि श्री देवरातशर्मणः आध्यक्ष्येण वेदपरिषत्, श्री लाल बहदूरशास्त्रिणः आध्यक्ष्येण श्री टि. टि. कृष्णमाचार्यस्य अभिभाषणेन महाधिवेशनं, श्री आदित्यनाथझा महोदयस्य आध्यक्ष्येण श्री भक्त दर्शनस्य अभिभाषणेन च अखिलभारतसंस्कृतप्रसारकसम्मेलनं च निष्पन्नानि।

द्वितीयदिने श्री उमेशमिश्रस्य आध्यक्ष्येण दर्शनपरिषत्, श्री N. V. गाड्गिलस्य आध्यक्ष्येण वहिरङ्गसमावेशः, श्री लालबहदूरशास्त्रिणः आध्यक्ष्येण संस्कृतस्नातकोत्सवः, श्री रामचन्द्रमार्तण्डहा-

जिग्नवीनस्य आध्यक्ष्येण अन्तरराष्ट्रीय संस्कृतपरिषत्, श्री राघवन् महोदयस्य आध्यक्ष्येण अखिल भारतीय संस्कृतपत्रकार सम्मेलनं च सम्पन्नानि।

तृतीयदिने श्री नरहरिविष्णुगाडूगिलस्य आध्यक्ष्येण बहिरङ्ग समावेशः, श्री गिरिधरशर्मणः आध्यक्ष्येण अखिलभारतीय शिक्षापरिषच्च निर्वृत्तौ।



## तत्र प्रथमदिने अध्यक्षाणां
## आदित्यनाथझामहोदयाः
## स्वीयाभिभाषणे एवमवदन्

कमलसम्भववक्त्रसरोजिनी-
वनविहारमरालविलासिनी।
कविकदम्बककामगवी सतां
सुखकरी जयतात्सुरभारती॥

पूज्याः पण्डितवर्याः, शास्त्राध्ययनैकव्रता विद्यार्थिनः, संस्कृतानुरागिणो नागरिकाश्च।

इदमैतिहासिकं तथ्यं, यत् प्राचीनभारते संस्कृतमपि शिक्षितवर्गस्य अखिलभारतीया भाषा आसीत्। एकत्रा तस्य निवासिनः अन्यप्रान्तानां निवासिभिः सह वार्तालापं पत्रव्यवहारं च संस्कृतभाषयैव कुर्वन्ति स्म। विदुषां शास्त्रीयविचारविनिमयेषु, न्यायालयादौ प्रार्थनापत्रप्रदानादिव्यवहारेषु च इयमेव भाषा प्रयुज्यते स्म। सर्वशास्त्राणामध्ययनाध्यापनयोः माध्यमपि इयमेव भाषा अविद्यत।

यदा च अशिक्षितवर्गेषु चेतना जागरणक्रमेण पालीप्राकृतापभ्रंशभाषाः प्रादुर्भूय प्रसरीतुमारभन्त, तदा तासां मार्गे संस्कृतं बाधकं नाभवत्, अपितु तासां विकासे साहाय्यमेवाचरत्। उचितमपि एतदेवासीत्, यतो हि सर्वजनोपयोगिनः साहित्यस्य सर्वसाधारणभाषयैव निर्माणे लोकहितानुकूलं भवति। तदानीन्तनैः संस्कृतविद्वद्भिः इदं तथ्यं निःसंशयमनुभूतम्। आर्यासप्तशत्याः लेखकेन

गोवर्धनेन तु प्राकृतभाषायाः माधुर्यस्य महती प्रशंसा कृता-यथा हि-

वाणी प्राकृतसमुचितरसा
बलेनैव संस्कृतं नीता ।
निम्नानुरूपनीरा
कलिन्दकन्येव गगनतलम् ॥

आत्मनः प्रान्तस्य क्षेत्रस्य च भाषायां जनानामनुरागस्य, तस्या अस्तित्वरक्षायै तेषामाकांक्षायाश्च सद्भावो यद्यपि स्वाभाविकः किं च यदा जनानां मनांसि विविधैः सन्देहैः बहुप्रकारैरविश्वासैश्च दूषितानि, तदा कस्याश्चिदपि एकस्या भाषायाः, कामं सा कस्यापि महतो जनवर्गस्य भाषा किं न स्यात्, राष्ट्रभाषाशब्देन व्यपदेशः वरटाच्छत्रे यद्यपि हस्तक्षेप इव, तथाप्येतन्निर्विवादं यत् संस्कृतं संपूर्णस्य भारतवर्षस्य एकताया आधारस्तम्भः असत्यानुधाविनि अस्मिन् वर्तमाने अनेकैर्मतभेदैः, विविधैर्विरोधैश्च जर्जरिताः सन्तोऽपि, यदद्य वयं एकत्र अनुबद्धा स्मः, स खलु अस्माकं महतोऽतीतस्यैव संस्कृत निहितस्य महिमा। संस्कृतं हि अस्माकं रक्तगतम् । वयं च तथा यतिष्यामहे यथा संस्कृतं कदापि मृतं न स्यात्। यतः संस्कृते, संस्कृताध्ययने एव च भारतस्य स्वातन्त्र्यं निहितमस्ति ।

विद्वज्जनाः ! विदितवेदितव्यानां भवतां समक्षं इदं निवेदनीयं नास्ति यत् संस्कृतवाङ्मयं अतीवविस्तृतं, विपुलं, विभिन्नज्ञानविज्ञानानां भाण्डागारं चास्ति । परं प्रचलितया परीक्षाप्रणाल्या अध्येतॄणां अध्यापकानां च दृष्टिः एवं संकोचिता, येन अधुनातनानां संस्कृतज्ञानां अत्यन्तं संकीर्णं जायते, संस्कृतपण्डितानां पुरातनान्वेषण प्रवृत्तिः नवनिर्माणक्षमता च सांप्रतं लुप्तप्राया । संस्कृत विद्यार्थिनां व्यक्तित्वं च पूर्णतया न विकसति, येन ते समाजे आत्मानं उपेक्षितं अनुभवन्ति। अतो संस्कृतपाठ्यक्रमे, शिक्षाविधौ, परीक्षापद्धतौ च कंचन ईदृशं परिष्कारं कुर्युः, येन संस्कृत स्याध्ययनाध्यापनयोः नवीनं जीवनं अभिवांछितं पूर्णत्वं च आयातु । येन संस्कृतज्ञवर्गः

सैनापत्यं च राज्यं च
दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च
वेदशास्त्रविदर्हति ॥

इति मनूक्तं सत्यं स्वजीवनेऽवतारयितुं प्रभवेत् ॥

# श्री चन्द्रलाम्बाष्टकम्

पूर्णेन्दुवक्त्रां नतकामदोग्ध्रीं हिरण्यवर्णां श्रुतगीतकीर्तिम् ।
आसेचनांगीं सुरवृन्दसेव्यां श्रीचन्द्रलाम्बां मनसा स्मरामि ॥ १ ॥

निवासयोग्यं मम सन्निधानं विचिंत्य चेत्थं मुनिना हि साकम् ।
उवास चंद्रावरसन्नतीके श्रीचन्द्रलाम्बां मनसा स्मरामि ॥ ॥ २ ॥

ब्रह्मादिदेवाश्च यदाश्रयेण सृष्टयादि कुर्वंति महेश्वरीं वै ॥
उत्पत्तिरक्षाप्रलयप्रकर्त्रीं श्रीचन्द्रलाम्बां मनसा स्मरामि ॥ ३ ॥

यस्याः कटाक्षस्तु नरेषु येषु मान्याः गुणाढ्याः शुचयो भवन्ति ।
ते सज्जनाः शीलवतां वरिष्ठाः श्रीचन्द्रलाम्बां मनसा स्मरामि ॥

इयं सरिन्मे जनकस्य बंधुः भीमेति चैतां च सरिद्वरासु ।
श्रेष्ठां करोमीति तटे वसंतीं श्रीचन्द्रलाम्बां मनसा स्मरामि ॥ ६ ॥

यत्पादसंसेवननतो लभंते चतुर्विधार्थान् मनुजाः सुखेन ।
दीनार्तिहन्त्री भजतां शरण्यां श्रीचन्द्रलाम्बां मनसा स्मरामि ॥ ७ ॥

भीमानुकूले च सुमन्दिराणां मध्ये स्थितां सुन्दरगर्भगेहे ।
भक्तेष्टदात्रीं करुणार्द्रचित्तां श्रीचन्द्रलाम्बां मनसा स्मरामि ॥ ८ ॥

अष्टकं चन्द्रलादेव्याः पठेद्यः श्रद्धयान्वितः ।
धनधान्यसमृद्धः स्यात पुत्रपौत्रसमान्वितः ।
सर्वपापविनिर्मुक्तः जीवेत्स शरदः शतम् ॥ ॥ ९ ॥

शाहपरुयपुरस्थेन नृसिंहार्यसुतेन च ।
प्रद्युम्नसगरेणेदं कृतमष्टकमञ्जसा ॥

# गुरुकुलानि

[ श्री ता० कृष्णमूर्तिशास्त्री ]

स्वतन्त्रभारतदेशे बहोः कालादपि विद्यासमुपार्जननिमित्तं बहूनि श्रेष्ठतमानि गुरुकुलानि तत्र तत्र स्थापितानीति दृश्यते । दैववशाद्भारतदेशस्य परहस्तगतत्वेन भारतीयसंस्कृतेः अनुगुणं विद्याविधानं विहाय परैः परिपालकैः आत्मनो देशस्य परिपालनानुकूलं भारतीयसंस्कृतिविरुद्धमपि विद्याविधानं प्रवेशितम् ।

अथापि भारतीयसंस्कृतेः हिमालयवत् अत्यन्तं निरूढतया तदनुकूलं विद्याविधानं निर्वर्तयितुं गुरुकुलानि तत्र तत्र अद्यापि निर्वाह्यन्ते । एषु विद्यामभ्यस्यन्तः बालाः बालिकाश्च आत्मभिः अभ्यस्तासु विद्यासु अत्यन्तं निष्णाताः भवन्ति ।

पाश्चात्यनागरिकतायाः प्रबलतया स्थितेऽपि वङ्गदेशे अर्धशताब्दात्पूर्वमेव शान्तिनिकेतनं गुरुकुलं प्रतिष्ठाप्य स्वदेशे देशान्तरेषु च जेगीयमानचरितोऽभूत रवींद्रनाथठागूरमहाशयः । गते वत्सरे सर्वत्र देशे देशांतरेषु च तस्य महोदयस्य शताब्द्युत्सवः प्राचलत् । एतद्भारतीयानामस्माकं महद्गर्वकारणं भवति ।

एवं च नवद्वीपे वाराणास्यां लक्ष्मणपुर्यां पुण्यपत्तने आरब्धानि गुरुकुलानि अद्यापि प्रवर्तन्ते, यत्र विद्याभ्यासक्रमः बोधनक्रमश्च विशिष्टः भवति । तत्रैव विशेषाभिवृद्धिः नूतनविकासश्च भवति ।

मुरारिकविः आत्मनः अनितरसाधारणं पांडित्यं प्रदिदर्शयिषुः गुरुकुलशिक्षा विशेषं एवं स्तौति ।

देवीं वाच मुपासते हि बहवः
स्सारं तु सारस्वतं
ज्ञानी ते नितरामसौ गुरुकुल-
क्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः
किं त्वस्य गम्भीरता-
मापाताळनिमग्नमपीवरतनु-
र्जानाति मन्थाचलः ॥

समुद्रगाम्भीर्यं अगाधत्वं च अत्यन्तं अन्तःप्रविष्टः मन्थाचल एव जानाति, न तु ये वानरभटाः केवलं अब्धिं सेतुना उदतरन् ।

एवमेव भाषाणां संपूर्णः परिचयः गुरुकुलवासेनैव जायते, न तु ऐकघट्यां द्विघट्योः वा दिने भाषाणां बोधनेन ।

निरंतरं परस्परं संलापेन भाषा स्ववशा अभिवर्धते। (अपि च) ये विद्यार्थिनः यस्यां भाषायां कृषिं कुर्वंति तस्यामेव भाषायां यदि संभाषणादिकं क्रियते तदा सुलभोपायेन भाषाभिवृद्धिर्भविष्यति। तदैव स्वेन अभ्यस्तया भाषया अन्यस्मै सुबोधं निवेदयितुं शक्यते।

अतः भाषाबोधनाय ईदृशानि गुरुकुलान्येव समीचीनानीति वचने सन्देहो नास्ति। केवलं पुस्तकैरभ्यस्तया भाषया स्वयं स्पष्टं स्वाभिप्रायं प्रकटयितुं न शक्नोति। तस्य पांडित्यं लुब्धस्यधनमिव अनुपयुक्तं भवति, तस्मिन्नेव तत्र विनष्टं भवेत। न किंचिदपि उपयुज्यते लोकोपकाराय।

अतः विद्यानां च सम्यग्बोधनाय एतादृशानि गुरुकुलानि अत्यन्तं आवश्यकानि। अत्र केवलं विद्याबोधन मात्रमेव निर्वर्त्यते, किं तु उपाध्यायस्य माणवकानां च सहवासस्य निरंतरतया बालानां सौशील्यादिगुणा अपि स्वयमेव वर्धन्ते।

स्वतंत्रे भारते वर्षे ईदृशानि गुरुकुलानि प्रतिग्रामं प्रतिपत्तनं च प्रतिष्ठाप्यन्ते यदा, तदैव प्राच्यभाषासंस्कृतिः भारतीयसंस्कृतिः सहस्रकरस्यकिरणा इव सर्वत्र प्रसरितुं शक्यते। तादृशं महाभाग्यं भारतीयानामस्माकं भगवान् कल्पयतु॥



## शिशिरवर्णनम्

(श्री पै० व० रामानुजाचार्यः)

तवागमनतो जनाः शिशिर, कम्बलाद्यावृताः
नितान्तपुलकाञ्चिताखिलनिजांगयष्टिव्रजाः।
दिनाधिपखरातपं समुपसेवितुं वाँछिता-
स्सुखोष्णजलसेवका भुवि भवन्ति सर्वेऽपिहि॥



# राजवेषः

[आ० वरदराजः]

कस्मिंश्चिद् ग्रामे कदाचित् वीथीनाटकं प्रदर्शितम् । तस्मिन् आंजनेयशर्मा इति कश्चिद् राजवेषं धृतवान् । प्रदर्शनानन्तरं तेनैव वेषेण स गृहं गतः । तत्तद्वेषधारणे उपयुक्तं वस्त्रादिकं पश्चात् तैस्तैरेव स्वत्वेन स्वीकर्तुं शक्यत इति प्रथमत एव निश्चितम् । नाटकप्रदर्शने प्रतिफलं तदेव तेषाम् ।

  

राजा आंजनेयशर्मा उन्मत्तकेन कुतूहलेन गृहं गतः । वेषधारिणः सर्वेऽपीतरे स्वस्वलब्धं वेषभूषादिकं सुरक्षितमकुर्वन् । परन्तु शर्मा पुनः स्वराजवेषं यथा-तथं धरन्नेवास्त ।

  

"वेष उन्मुच्यतां" - इत्याह तस्य भार्या । सा अतीव विनीता भर्तुर्हितकरी च । सा सर्वदा भर्तुः हृदयं जानन्ती तदपेक्षितं सर्वं सविमर्शं आचरन्ती आस्त । शर्माऽपि तस्यां अत्यन्तं प्रेमभरेण मुग्धः स्निग्धश्चासीत् । परन्तु तस्मिन् दिने सोऽतीव कुपितः । कारणं किमिति चेत्, रात्रौ नाटकप्रदर्शनेन राजा कोपमुद्रया आसीत् । तद्वदेव स गृहेऽपि भार्यां भर्त्सयामास ।

"सावधानं ब्रूहि । किं न जानासि मां राजानम् ? ज्ञायतां यथातथम्" । - इति ।

  

[4]

सा दिङ्मूढा अतीव भीता; भर्ता उन्मादग्रस्त इति बहु त्रस्ता च। प्रातः परामृश्यः इति मत्वा तूष्णीं बभूव।

  

परेद्युः प्रभाते राजंमन्यः स शर्मा राजसं प्रदर्शयन् "मन्त्रिन्" इत्याजुहाव। तस्य गृहे पालितः शुनकः कश्चिदासीत्। तस्य नाम "मन्त्री" इति।

मन्त्रिणः आह्वानं श्रुत्वा स शुनकः तत् स्वविषयमेवेति मत्वा पुच्छं चालयन् स्वामिनः समीपं आजगाम।

  

आगच्छागच्छ, गच्छाव मृगयायै-इत्याह शर्मा। एवं स राजवेषेणैव निर्गतः।

"अहो! बत! नाथ! न गन्तव्यं तेन वेषेण" - इत्याह तस्य दयिता। द्रष्टारः परिहसेयुरिति सा स्वभर्तारं न्यवारयत्।

"प्रिये! शत्रवः समागताः। अद्याहं युद्धाय कृतनिश्चयः। मा वारय मां" - इत्याह राजा नाटकीयधोरण्या, तादृशी घटता काचिदस्ति नाटके; तद्वत् प्रवर्तितं तेन।

"हंहो! बत! महत् कष्टं! उद्भूतः उन्मादः। ललाटलिखिता-रेखा; किं क्रियतामिदानीम्" - इति चिन्ताजडा तस्य कान्ता।

"मुग्धे मा भैषीः, सत्वरमेव अहं विजयलक्ष्मीसनाथः प्रतिनिवर्तिष्ये" - इति वदन् आंजनेयशर्मा वीथ्यां गन्तुं प्रवृत्तः। शुनकस्य तु महान् संतोषः। स तं अन्वगच्छत्।

  

एवं गच्छतस्तस्य मध्येमार्गं कश्चित् सृगालः उपागतः । तस्य अयं विषयस्सर्वोऽपि विदितचर एव ।

"महाराज! देशे बहूनां राज्ञां नाटके कतिपयदिवसैरवसितम् । भवदीयं एकांकिकायाः प्रदर्शनमपि एकरात्रिपरिमितमेव आसीत् । कति नासन् भुवि राजानः! अलमिदानीम् । तत्रभवान् पुरीं प्रतिनिवर्त-ताम्" - इत्याह सृगालः ।

  

स सृगालः अतिमेधावी । नूनं स वार्तापत्रिकाः प्रत्यहं पठन्नासीत् । जमीन्दारप्रभूणां प्राभवावसाने, षड्विंशाधिक - पञ्चशतसंख्याकानां (५२६) राजाधिराजानां भारतराजकीयरंगशालातः निष्क्रमणं, सर्वं समग्रतया पठितवान् स्यात् स जम्बुकोत्तमः ।

  

"मन्त्रिन्" - इति राजा स्वमन्त्रिणं आहूतवान् । "किमेतत् सत्यं? जम्बुकेश्वरवचनं कियत विश्वासार्हं? ब्रूहि तव भाषया यतोऽहं ज्ञातुं शक्नुयाम्" इति पप्रच्छ च ।

शुनकः अतीव तुष्टः । स्वामी खलु स्वयं तं आमन्त्रयति । सोऽपि गुर्गुरध्वनिना किमपि मन्दंमन्दं बुक्कति स्म ।

  

ततः शर्मा गृहं प्रतिनिवृत्तः । सृगालः पुनः तत्रत्यं कुक्कुटशिशुं कंचित् गृहीत्वा पलायितः । कुक्कुटी विवशा सती "कुरू-कुरू" निन-दन्ती शेषान् शिशून् स्वेन सह गृहीत्वा कुटीं प्रविष्टा ।

  

"सर्वेऽपि राजानः विलीनाः । केवलमहमेकाकी राजा सन् किं कुर्याम्? अहमपि तावत् तूष्णींभावमातिष्ठे" इति आंजनेयशर्मा स्वभार्यायै प्रतिशुश्राव । साऽपि निर्विचारं महता सन्तोषेण गृहेषु कार्येषु निमग्ना ॥



# नववर्षशुभाशंसनम्

श्रीशो दिशतु गोपालो व्यथास्सर्वा निवर्तयन् ।
गोगोपाद्यखिलानां नः सन्मङ्गलपरंपराम् ॥

मासानां मार्गशीर्षोऽस्म्यहमिति भगव-
द्गीत आलोच्य यातो
देवानां कल्यरूपः शुभ इह भगवान्
वासुदेवः प्रबुद्धः ।
सर्वेषां मानवानामपि शुभजनकोऽ
प्यागतः पुष्यमासः
सर्वे कल्याणकार्याण्यपि कुरुत जना-
स्सादरं निर्विशंकम् ॥

रात्रिर्गता श्रीशमुखामराणां
गोदादिगधादिभिरद्य कल्ये ।
प्रबोधिताः श्रीपतिशङ्कराद्या-
श्चापे हि मासे शुभदा भवन्तु ॥

शुभे नक्रमासं गतेऽर्केऽह्व्यमुष्मिन्
यशोदाकीशोरेश्वरेन्द्रादिदेवाः ।
सदास्माकमायुः पशुक्षेमसंप-
त्सुतादिप्रदास्सन्तु भक्तव्रजानाम् ॥

यः पुष्यमासे दिवसे द्वितीये
महेन्द्रपूजा रचिता हि गोपैः ।
संरुध्य गोवर्धनशैलपूजां
अकारयन्नोस्तु शुभाय कृष्णः ॥

गोगोवर्धनपूजनं विरचितं
गोपादिभिस्सादरम्
क्षीराद्योदनधूपदीपकदली-
सन्नारिकेलादिभिः ।
यो गोवर्धनशृङ्गगस्सकलम-
प्यंगीचकार स्वयं
गोपालस्स तनोतु नश्शुभमसा-
वानक्रमासं पुनः ॥

संक्रुद्धेन सुराधिपेन नितरां
संप्रेरितेष्वेकशो
वर्षत्स्वंबुधरेषु सप्तसु तटि-
ज्झंझारवाद्यैरपि ।
छत्रीकृत्य कनिष्ठिकाङ्गुलितलात्
गोवर्धनक्ष्माधरं
गा गोपानपि योऽवदस्तु स हि नो
गोपालबालः श्रियै ॥

विज्ञातवृत्तो विमना महेन्द्रो
नन्दव्रजं प्राप्य हि गोपबालम् ।
प्रसादयामास हरिं यमीड्यं
स नो दिशेत्सर्वधनानि कृष्णः ॥

गोदागाथादिगीतैरुषसि दिविषदां
मार्गशीर्षेऽद्य मासे
रम्यैः प्रबोधिकीभिः बुधजनपठितैः
प्रत्यहं बोधितश्च ।

नवैर्वैराज्यसिक्तैरपि विबुधवरै-
गौंडमौद्गोदनाद्यैः
गोपस्सम्पूजितस्स्तात
नवशरदि हरिः श्रेयसे भूयसे नः ॥

स्वावुत्तरं वर्त्म भव्यं प्रविष्टे
नवान्नाभिधेष्ट्यादिमे नोऽखिलानाम्
नवव्रीहिपक्वान्नपूजाप्रतुष्ट-
स्स गोपालबालो दिशेन्मङ्गलालि ॥

गोपालबालस्य कृपाकटाक्षात्
स्वकालवृष्ट्यादिसमृद्धसस्या ।
वसुन्धरा सर्वकृषीवलानां
आनक्रसंक्रान्ति शुभप्रदा स्यात् ॥

दृष्ट्वा ग्लानिं च धर्माणां सिसृक्षुश्शीघ्रमात्मनः ।
दिशन्नानवचापान्तं नोऽव्यात् गीतागुरुः स्वयम् ॥

पत्नीपुत्रीसुताद्यैश्च गोभूवाक्संपदादिभिः ।
जनास्सर्वेपि वर्धन्तां चिरं नूतान्नपाकिनः ॥

द्रोणदुग्धदुहा गावः शकटादिधरा वृषाः ।
तत्पालाः कृषिकास्सर्वेऽभिवर्धन्तां चिरं जनाः ॥

वर्धतां द्राविडीभाषाऽऽचन्द्रतारं च संस्कृती ।
तद्भाषिणो जनाश्चोलचेरपाण्ड्यादिराज्यगाः ॥

पैत्तंबव्यग्रहारस्थः श्रीवराहगुरोस्सुतः ।
नवाब्दाशासनं चक्रे वात्स्यो रामानुजः कविः ॥



# वार्ताः

भुवनेश्वरे प्रवृत्तायां ६८ कांग्रेस महासभायां अध्यक्षः कामराजः अवदत्– अनभिवृद्धप्रान्तानां अभिवृद्धये पृथक् काचन शाखा निर्मास्यते, निरुद्योगिनां वृत्तिकल्पनाय वृत्तिशिक्षणकेन्द्राणि स्थापयिष्यन्ते" इति ॥



काश्मीरेषु हजरतबल् - मसीदे पवित्रकेशस्य अदृश्यतां पुरस्कृत्य महान् कोलाहलः अभवत् । एतत् व्याजीकृत्य पाकसर्वकारः महान्तं संरम्भं अकरोत् । अन्ततः सः केशः पुनः प्राप्तः इति शुभा वार्ता श्रुता । तथापि दुर्जनाः तं प्रश्नं न शामयन्ति ॥



तिरुपति तिरुमलै देवस्थानस्य कार्यनिर्वाहकः श्री अन्नारावः तत् पदात् विरतः । ३० वर्षपरिमिते अस्य पालने देवालयस्य सौकर्याय प्रजासौकर्याय, विद्यारोग्यपूजासेवादिसौकर्याय च सद्विषयाय महत् धनं व्ययितम् । एतादृशः पालकः न भूतो न भविष्यतीति जनाः कथयन्ति ॥



आन्ध्रविश्वविद्यालयव्यवहारेषु अक्रमप्रवृत्तयः प्रारब्धाः । ताः शीघ्रमेव समर्थैः निराकरणीया इति कूर्मा वेणुगोपालस्वामी वदति ।



आन्ध्रप्रदेशसाहित्य - अकाडमीसमावेशः हैदराबादनगरे प्रथमसप्ताहे समचलत् । श्री बे. गोपाल रेड्डिः अध्यक्षत्वेन श्री शिवशङ्करशास्त्री च उपाध्यक्षत्वेन निर्वाचितौ ।



पूर्वपाकात् महम्मदीयपीडिताः लक्षशः हिन्दुजनाः भारतमभिद्रवन्ति ।



अन्तर्जातीय-प्राच्यभाषाभिज्ञानां परिषत् देहल्यां ४–१० ति. पर्यन्तं समचलत् । उपपंचाशद्देशीयाः सदस्याः समुपस्थिताः । संस्कृत-द्विपदोच्चारणेन आपृच्छनमकारि ।

★ ★ ★

पेनामाकुल्याविषये पेनामामेरिकायोः विवादः अपरिष्कृत एव तिष्ठति ।

★ ★ ★

एप्रेलमासप्रभृति देहलीमद्रासयोः मध्ये सप्ताहद्विवारगामी जंघालः धूमशकटः प्रचालयिष्यते ।

★ ★ ★

नागशासनसभानिर्वाचने प्रभुत्वपक्षस्य ४६ स्थानानि लब्धानि । प्रतिपक्षस्य तु ११ स्थानान्येव ।

★ ★ ★

आन्ध्रराजधानीनगरे रष्या-सहायेन राकेटपरिकराणां निर्माणागारः स्थापयिष्यते ।

★ ★ ★

चैनाध्यक्षस्य स्वदेशगमनं निमित्तीकृत्य पाकदेशः काश्मीरसमस्यां भद्रतामण्डल्यां उपास्थापयत् । भारतप्रतिनिधिवर्गनायकत्वेन चाग्ला महोदयः तत्र प्रत्यवतिष्ठते । मतसामरस्यलाभाय भारताध्यक्षेण श्री राधाकृष्णमहोदयेन सूचितं पाकभारतोभयदेशसम्मिष्टिविज्ञप्तिप्रकाशनं अय्यूबखानः तिरश्चकार ।

★ ★ ★

श्री लालबहदूरशास्त्री अनियतशाखामन्त्रित्वेन संजीवय्यः कार्मिभियोगसाधक मन्त्रित्वेन च भारतसर्वकारेण निर्णीतौ ।

★ ★ ★

फ्रान्सदेशः चैनां अनुमोद्य दौत्यसंबन्धादिकं तया सह कल्पयिष्यति । इयं भारतामेरिकायाः खेदकरी वार्ता ।

★ ★ ★

कर्नूलमण्डले बसरूटानां जातीयीकरणं असाध्विति महोन्नतन्यायस्थानस्य निर्णयेन आन्ध्रप्रदेशमुख्य मन्त्री श्री संजीवरेड्डिः स्वपदवीत्यागलेखमर्पितवान् ।

★ ★ ★

कथानिका —

## कण्णकी

(विद्याप्रवीणः शठकोपः)

इतरदेशापेक्षया भारतदेशस्य वैशिष्ट्यं बहुभिः प्रकारैः जागर्ति। विशेषतः भारतीयनारीणां पातिव्रत्यप्रभावेण भारतदेशस्य माहात्म्यं पारेसमुद्रं विलसति। सावित्रीनळायिनीप्रभृतयः पतिव्रतानां धुरि कीर्तनीयाः आसन्। तादृशसाध्वीमणीनां प्रसवित्र्याः भारतभूमेः दक्षिणप्रान्ते काविरिप्पूम्पत्तनम् इति किञ्चित पत्तनम् अस्ति। तत्र प्रायशः अष्टशतोत्तरसहस्रवत्सरेभ्यः प्राक् कोवलः इति कश्चित वणिक् कण्णकीनाम्नीं कन्यां परिणीय सुखेन कालं यापयन् आसीत्।

तौ दम्पती धनेन विद्यया च अतुलितकीर्तिमन्तौ आस्ताम्। किन्तु कोवलः अपथे पदं समर्प्य सर्वामपि सम्पत्तिं नाशयामास। अन्ततः कण्णक्याः स्वर्णाभरणानि सर्वाण्यपि अगृह्णात। तस्याः पादालङ्कारभूतं नूपुरयुग्मम् एव अवशिष्टम् आसीत्।

यदा सर्वमपि धनं विनष्टमभूत् तदा तस्य सद्बुद्धिः उत्पन्ना। इतः परं ईदृशं दुराचारं त्यक्त्वा सन्मार्गगामिना मया भवितव्यम् इति अभिप्रायः समभूत्। तदर्थं सः भार्यायाः नूपुरम् एकं गृहीत्वा तत् विक्रीय तस्मात् लब्धेन धनेन यत्रकुत्रापि वाणिज्यं करिष्यामि इति आलोचयामास। कण्णकी अपि भर्त्रा साकं निवसितुं ऐच्छत।

उभौ अपि काविरिप्पूम् पत्तनं त्यक्त्वा मार्गे बहुविधानि कष्टानि अनुभूय कथञ्चित् दक्षिणमधुरां प्राविशताम्। कोवलः कण्णकीं कस्यापि गोपालकस्य गृहे स्थापयित्वा एकं नूपुरं गृहीत्वा स्वयम् एकाकी मधुराविपण्यां विक्रेतुं प्रायतत।

तदा तत्र केनापि स्वर्णकारेण सह समागमः अभवत्। स स्वर्णकारः तत्रत्यस्य राज्ञः गृहे राज्ञ्याः नूपुरमेकं अचूचुरत इति राजा तस्य स्वर्णकारस्य उपरि अतीव क्रुद्धः आसीत्। सः कोवलस्य हस्ते नूपुरं दृष्ट्वा राज्ञः समीपं गत्वा 'प्रभो! अयं कोवलः एव राज्ञ्याः नूपुरम् एकं चोरयामास इति अवदत्। राजापि अविचार्य एव 'कोवलं हत्वा तस्य हस्ते विद्यमानं

नूपुरम् आनयत' इति भटान् आदिदेश। तेऽपि तथैव अन्वतिष्ठन्।

वृत्तान्त मिमं कण्णकी श्रुत्वा अवर्णनीयं दुःखं अनुबभूव। सोरस्ताडं भूमौ पपात। सोल्लुण्ठम् अरोदीत। अश्रुधारा नदीव प्रावहत। किं मम भर्ता चोरः? अपि न्यायविचारः कृतः? इति उच्चैः आक्रोशत।

सा द्वितीयं नूपुरं हस्ते धृत्वा मधुरा वीथीषु परिभ्रमन्ती अन्यायमाचरतः राज्ञः देशेस्थिताः भोः प्रजाः! नूपुरं विक्रेतुम् आगतं मम भर्तारं चोरं कथं ब्रूत? इति शुक्रोश। एवं रुदंतीं तां दृष्ट्वा सर्वे जनाः भीतभीताः अभवन्।

सा तत्र छिन्नशिरसं स्वभर्तारं दृष्ट्वा- किमस्मिन् राज्ये पतिव्रताः न सन्ति? उत्तमपुरुषाः अपि न सन्ति? किं देवो नास्ति? किमपि पापम् अजानानं मम भर्तारं हन्तुं राज्यमिदम् अवकाशं अदात। अहो! अस्मिन् राज्ये किं न्यायः नास्ति? किं नीतिमन्तः न सन्ति? मदीयः दुःखाग्निः कथम् उपशमेत्? इमं दुराचारं दुष्ट राजानम् इदानीमेव दृष्ट्वा अन्यायेन कृतस्य मम भर्तुः वधस्य कारणं प्रक्ष्यामि। इति आक्रोशन्ती राजप्रासादं प्रति अधावत।

गत्वा च राजप्रसादम् - 'अरे दुरात्मनः राज्ञः द्वारपाल! ब्रूहि मद्वचसा, भर्तृहीना काचिन्नारी नूपुरमेकं हस्ते धृत्वा दुष्ट राजानं दिदृक्षति' इति अवदत।

तस्याः ईदृशम् उद्धतं वचः श्रुत्वा सञ्जातवेपथुः द्वारपालः द्रुतं राजानम् उपगम्य – देव! भर्तृनाशेन दुःखिता, भीषणं गर्जन्ती, नूपुरमेकं हस्ते धृत्वा काचित स्त्री भवद्दिदृक्षया द्वारदेशमध्यास्ते। श्रुत्वा देवः प्रमाणम्—इत्युक्त्वा साञ्जलिबन्धः तस्थौ।

ताम् आनय इति राज्ञः आज्ञया द्वारपालः ताम् अन्तः निनाय 'साश्रुनेत्रा अत्र आगता त्वं का? किं वा कारणम् आगमनस्य' - इति राज्ञा पृष्टा कण्णकी - भो दुराचार प्रभो! अहं का इति निवेदयामि शृणु, पुरा पारावतस्य प्राणरक्षणार्थं निजशरीरमपि समर्पितवतः शिबिचक्रवर्तिनः राज्यम् मम निवासभूमिः। गोवत्सं रथचक्रप्रेरणेन हतवन्तं मदान्धं स्वपुत्रं वधदण्डेन दण्डितवतः मनुधर्मचोलस्य राज्ञः राज्यम् मम निवासस्थलम्। तस्य राज्यस्य का वेरिप्पूम् पत्तनं इति नाम। मम भर्ता स्वजीविकां निर्वोढुम् इदं नगरम् आगतवान्। मदीयं नूपुरम् एकं विक्रेतुम् इदं नगरम् आगतः सः दुराचारेण त्वया अन्यायेन हतः। तस्य भार्या

अहम्। मम नाम कण्णकी-इति।

एतत श्रुत्वा राजा - किं चोरस्य वधः अन्याय्यः? किं राजनीतिविरुद्धः? इति अपृच्छत। कण्णकी भो दुरात्मन्! कः चोरः? मम भर्ता चोरः? किं चोरितवान्? यदि भवत्पत्न्याः नूपुरं मम भर्ता चोरितवान् तर्हि इदानीमेव परीक्षन्तु भवन्तः। मदीयं नूपुरं मणिगर्भितम्। भवत्पत्न्याः नूपुरस्य गर्भे किमस्ति? — इत्यपृच्छत। राजा तच्छ्रुत्वा — मत्पत्न्याः नूपुरं मुक्त गर्भितम् इति प्रत्यवदत्। अनुपदमेव कण्णकी कोपारुणितलोचना महता वेगेन स्वहस्ते स्थितं नूपुरं भूमौ सन्ताड्य बभञ्ज। तस्मात मणयः निर्गताः राज्ञः मुखे उदपतन्। राजा दिग्भ्रान्तः किमपि वक्तुमशक्नुवानः मूर्छितः अभवत। छत्रं ननाम। सिंहासनं चकम्पे। स्वयं च आत्मानं विनिन्दन् निरपराधस्य वधेन चिन्ताकुलः पञ्चत्वं गतः। अनन्तरं कण्णकी तं प्रदेशं त्यक्त्वा बहिरगच्छत्। कोपस्तुनशान्तः। सा तस्य नगरस्य वीथीषु भ्रमन्ती यद्यहं पतिव्रता अस्य दुरात्मनः राज्ञः नगर मिदं दाहयिष्यामि। इति शपथ मकरोत्। अनुपदमेव अग्निदेवोऽपि आविर्भूय अम्ब! किमर्थं मा मस्मरः? मया किं कार्यम्? इति अपृच्छत। तदा कण्णकी - हुताशन! ब्राह्मणान्, धार्मिकान् पशून्, पतिव्रताः विहाय, ये अस्मिन् नगरे दुराचाराः दुष्टाः वर्तन्ते तान् सर्वान् दाहय इति अग्निम् आदिदेश। अग्निरपि महता संरम्भेण सर्वान् दुष्टान् भस्मसात अकरोत।

अथ कण्णकी वैगानद्याः तीरेणैव तन्नगरं विहाय चतुर्दश दिनानि प्रययौ। चतुर्दशे दिने कुत्रापि एकस्मिन् पर्वते कस्यचित वृक्षस्य छायायां यदा उपविष्टा आसीत् तदा स्वर्लोकात् विमानारूढाः देवाः तस्याः पुरस्तात अवरुरुहुः। तेषां मध्ये दैवं रूपं धृत्वा स्थितं स्वभर्तारं वीक्ष्य तं गाढमालिङ्ग्य तेन साकं स्वयमपि स्वर्गम् आरुरोह —



## गानाजीकथा २

### मूषिक मोक्षः

[भा० वरदराजः]

मद्रासनगरे कश्चन नास्तिकः कश्चन भक्तश्च प्रातिवेशिकावास्ताम्। उभयोरपि परस्परस्नेहः प्रत्यहं प्रवृद्धः। नास्तिकः कुले महति जातः प्रवृद्धः विद्याबुद्धी च प्राप्तः। यद्यपि स वाचि नास्तिकः तथापि कर्मणि - पेष्टायां पुनः योग्यः सद्वृत्तश्च। प्रतिदिनं उभावपि वादोपवादेषु निमग्नौ भवतः। अन्ते द्वावपि एकत्र समाविश्य जलपाना-दिकं कृत्वा पश्चात् गृहं गच्छतः स्म।

नास्तिकः "देवो नास्तीति, वदन् प्रत्यहं दैवमनिच्छन्नप्येवं स्मरन्नेवासीत्। भक्तस्तु "अस्तीति" निरूपयितुं प्रतिपक्षीय पूर्वपक्षं अनुक्षणं उदाहरन् अन्ततः स्वभक्तिं अर्धभागावशिष्टां अकरोत्। अकस्मा-दुभावपि सन्निपात - ज्वर - ग्रस्तौ मृतौ।



यमः "स्वागतं" इति नास्तिक-माहूय सभाजयामास। वत्स! त्वं आत्मानभिज्ञां सद्गतिं प्राप्तोसि। तवागमनं प्रतीक्षन्ते विष्णुकिंकराः पश्य तावदितः, इति तान् दर्शयित्वा "तैस्सह गम्यता" मित्युवाच।

माऽस्तु; न देवो न दैवं वा-इत्याह नास्तिकस्तत्राऽपि। विष्णु-किंकराः न तत्कर्णेऽकुर्वन्। तं बलात् गृहीत्वा अपाकर्षन्तो गताः। सोऽपि रुदन्नेव विष्णुलोकं गतः।



"वत्स, इति यमः भक्तमपि दृष्ट्वा सदयं भाषितुं आरेभे। भक्तः तु तत्राऽपि वादे बद्धादरः प्रववृते। "तव वादोपवादैरिदानीं न नः किञ्चिदपि प्रयोजनम्; वृथैव हि वादप्रतिवादैः जीवितं व्यपनीतवान् असि। पुनः प्रतिनिवर्तस्व, कतिपय दिवसैः श्री रङ्गनिलये (देवालये) मूषिकभावं प्राप्य तत्रत्यं उच्छिष्टा-

दिकं भुक्त्वा यथा - भय - भक्ति जीवितं यापयित्वा पश्चादागच्छ, गच्छ - इति यमो भक्तं पृष्ठे सानुनय मास्फाल्य प्रैषयत् ।

"मातः ! लक्ष्मीः मामेवं विधं कर्तुं किमुचितम्? इति भक्तः साक्रोशं रुदन् श्रीरङ्गमागतः । भ इदानीं न भक्तः, अपि तु मूषिक-स्समभवत् ।

स मूषिकः मातृमूर्तेः लक्ष्मयाः सन्निधावेव स्वजीवितं यापयति स्म । मूषिकस्य आयुरत्यल्पम् । मानवानामेव शतमानमायुः । मूषिकस्तु स्वल्पेनैव कालेन वृद्धाभूत्वा म्रियन्ते । वृद्धभावात् प्रागेव वा मार्जाराः महामूषिका वा तान् गृहीत्वा भक्षयेयुः । एवं च अस्माकं मूषिकभक्ततः षण्मासाभ्यन्तर एव मातृमूर्तेः लक्ष्याः चरणारविन्दमभजत् ।

"एहि ! वत्स ! एहि ! त्वदर्थमेव अहं प्रतीक्षमागाऽस्मि" इति सादरं वदन्ती लक्ष्मीः तं करे गृहीत्वा उरसि सादरं निधाय गता यथागतम् ॥

तस्मात् – "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" ।





# मनोरञ्जनम्

माता – जाते किं सदा पठसि ?
सुता – आनन्दविकटं पठामि ।
माता – कस्तत्र विशेषः ?
सुता – न ज्ञायते नाम्नैव तदीयो विशेषः ?



क्रेता – प्रयच्छ आज्यं एक खिलग्राम परिमितम् ।
आपणिकः – इदं तत् ।
क्रेता – किमिदं ? वनस्पतिरिव दृश्यते । नास्ति अत्र सौरभलेशोपि ।
आपणिकः – अधुना सुरभिष्वेव तन्नास्ति । कुतः तत् आज्ये ।



प्रथमः – अयि, स महाशयः कः ?
अन्यः – सः के. डि. कांग्रेस नायकः ?
प्रथमः – त्वद्वचस्य कोर्थः ?
अन्यः – कृष्णा डिस्ट्रिक्ट कांग्रेसनायक इति ।



**उपाध्यायः** – अरे, लिंगाः कति ?

**शिष्यः** – चत्वारः ।

**उपाध्यायः** – के ते ?

**शिष्यः** – पुंलिङ्गः, स्त्रीलिङ्गः, नपुंसकलिङ्गः, शम्भुलिङ्गः इति ।

   

**पिता** – गोपाल, कुतः अद्य पाठशालां न गच्छसि ?

**पुत्रः** – अद्य प्रास्वातंत्र्यदिनविरामः ।

**पिता** – अरे, ह्यः खलु २६ तिथिः ?

**पुत्रः** – ह्य एव उपाध्यायपरतन्त्रैः अस्माभिः पताकवन्दनादिकमाचरितम्, अद्य तु यथार्थतः स्वतन्त्रैः अस्माभिः खेलवादिभिः तत् सम्भावनीत्यम् ।

   

**रामः** – रे शिव, कुक्कुटी खाडोपरि कुतः उपविशति ?

**शिवः** – तां वेत्रासने उपवेष्टुं न अनुमन्यन्ते गृहस्थाः । अतः सा तत्र उपविशति ।



# महतां शुभसन्देशाः

## श्रीकाञ्ची, प्रतिवादिभयङ्कर अण्णङ्गराचार्यः

स्वस्ति प्रेमविवृद्धये । नमो नमः श्रीमद्भिस्सानुरागं प्रेष्यमाणा गैर्वाणी यथाकालमधिगम्यते । इतःपरमियं प्रतिमासमवतरिष्यतीति-विदित्वा भृशं प्रमोदे ।

  

## वि. सुन्दरशर्मा,

(तंजापुरी.)

भवद्भिस्सादरं प्रेषिता "गैर्वाणी" मामाप्त् । भारतप्रभुतासा-हाय्यं च लब्ध्वाऽचिरादेव प्रतिमासं प्रकर्षहर्षमापादयन्ती संस्कृत प्रणयिनां हस्तमलंकरिष्यतीति श्रुत्वाऽमन्दमानन्दमनुभाति मे चेतः । प्राचीन नवीन भारतसंस्कृतीसेतुरिवेयं "गैर्वाणी" दिनदिन प्रवर्धमाना सकलविषयेषु च प्रमाणीभूता रसिकविद्वज्जनानां मोदं जनयतीति वस्तुस्थिति कथनमेतत् । "गैर्वाणी" प्रकाशने बद्धकंकणानां भवतां प्रयत्नः, एतादृशपत्रिका-प्रकाशनाय भारतप्रभुतानिर्वाहकैस्समये क्रियमाणं साहाय्यं चेत्युभयं श्लाघापात्रमतिमात्रम् ॥

# सुमतिशतकम्

( कुण्टिमद्दि शेषशर्मा )

[ आन्ध्रदेशे बद्देन (भद्रभूपाल) विरचितस्य सुमतिशतकस्य माहात्म्यं अनितरसाधारणं। अक्षराभ्यासे पूर्णे अनुपदमेव इदं शतकं पाठ्यते आन्ध्रबालकैः। साधारणनीतयः राजनीतयश्च मुख्याः गुम्फिता अत्र शतके ललितमधुरशैल्या। सुमतिशतक पद्यपरिचयविहीना आन्ध्रजिह्वा न वर्तत इत्यत्र न काप्यतिशयोक्तिः। तादृशस्य अस्य शतकस्य सर्वभारतीयतापादनार्थं इतःपूर्वमेव द्वित्राः कवयः संस्कृतानुवादं अकुर्वन्। तथापि श्री कुण्टिमद्दि शेषशर्मणा विरचितोयमनुवादः मूलानुसारी ललितमधुरः वृत्तेनापि तत्तुलामाददन् सहृदयहृदयान्यावर्जयति। कृतहस्तस्य अस्य कवेः प्रतिभया आविर्भूता इयं कृतिः अनुवादश्रेणीमुत्तीर्य स्वतन्त्ररचना भद्रासनं आरोहति।

सम्पादकः ]

श्रीरामदयामेदुर "बद्देन" नृपरचितसुमतिशतकीयाः।
रसिकजनकर्णपेयं नीतीरनुवच्मि संस्कृते सुमते ॥ १

यो बन्धुर्नाऽवसरे, नो वरदस्सेवितोपि यो देवः।
योऽश्वो न रणे धावत्यारूढस्तांस्त्यजेदरं सुमते ॥ २

पृष्ठोऽपि यो न यच्छति भृतिमस्य निषेवणाद्धि किं राज्ञः ?।
जङ्घालयुग्यहल्याकृष्याजीवो भृशं वरं सुमते ॥ ३

मा कुरु विफलां सेवां; मा भव देवालयाधिपः, कुजनैः।
मा कुरु मैत्रीं; मे को मा च वने चर कदापि हे सुमते ॥ ४

चलदचलदधरबिम्बं मधुरालापं विहाय मौनी यः।
अधिकाररोगपूरितबधिरान्धं पश्य मा शवं सुमते ॥ ५

ऋणफलितविषयभोगः; वैत्रेयतपश्च, जरसि युवदाराः।
दोषाऽज्ञराट्प्रभुत्वं सञ्जनयति दुःखमन्ततस्सुमते ॥ ६

वैद्योत्तमर्णविप्राः, निर्मलजलसततवाहिनी तटिनी ।
ग्रामे वसन्ति यस्मिन् वस तस्मिन्; मा विशान्यमयि सुमते ॥ ७

जामातुस्सौजन्यं, ललनासत्यञ्च, गोपसाहित्यम् ।
नस्युर्धवळाः काकास्तुषकण्डनजाश्च तण्डुलास्सुमते ॥ ८

क्षुधिते कदन्नममृतं; दाता कामं ददाति योऽवसरे ।
स नरः क्लेशसहिष्णुः, स्थिरचित्तो वंशदीपकस्सुमते ॥ ९

याऽऽर्थकरी सा विद्या; तत्पुंस्त्वं येन सङ्गरगमित्वम् ।
कविराड्विनुतिः पटुता; कलहः क्लेशाय केवलं सुमते ॥ १०

यो गुर्विणीं न गणिकां मुञ्चति तज्जीवनं, पयश्छाग्याः ।
पर्युषितकूपसलिलं, धिक् जगिधमहारिणीं क्षुधस्सुमते ॥ ११

यन्नपठति सुष्ठु वदन, मामन्त्र्याऽम्बेति याचते नान्नम् ।
नाह्वयति सोदरांस्तत्कुलालखनितावटो ध्रुवं सुमते ॥ १२

गोधाशतं हि शरदां, फणी सहस्रं, बकश्चिरं जीवेत् ।
किन्तेनाऽयुषि बाढं पुरुषार्थपरो भवेन्नरस्सुमते ॥ १३

उत्तमगुणा भवेयुर्नीचस्य कथं? किमारकूटस्स्यात ।
कनकं? तुलितोपि समं मूषाविद्रावितोपि हे सुमते ॥ १४

जलपायितुरगनिकटं, मदमत्तगजेन्द्रसन्निधिम्मा गाः ।
अपठितनीचान्तिकमुपसर्यागतवृषभसन्निधिं सुमते ॥ १५

उपकृतिरुपकर्त्रे न हि महती; स कृती नरस्तु यः कुरुते ।
अपकारिण उपकारं, तदीयदोषानुपेक्ष्य हे सुमते ॥ १६

(सशेषम्)

# गैर्वाणी

## [ मासिकी ]

इयं जनवरिमासात्प्रभृति मासिकी निस्सरति। वार्षिकं साधारणसदस्यताशुल्कं रू॰ ४-०० निर्णीतम्। अभिमानिनां वार्षिकं १०-०० ।

### यावज्जीवसदस्याः

| | | |
|---|---|---|
| महाराजपोषकः | रू ११६ | प्रदाता |
| राजपोषकः | रू ६० | प्रदाता |
| पोषकः | रू ३० | प्रदाता |

### विज्ञप्तिः

बहवः महाभागाः विनाशुल्कमेव गतसंवत्सरे पत्रिकां अगृह्णन्। बहुकालं तथा कर्तुं अशक्यं भवति। अतः प्रार्थये वार्षिकं रू॰ ४ संप्रेष्य पत्रिकायाः पोषणं कुर्वन्तु ते इति।

अपि च प्राचीनाः सदस्याश्च स्वच्छन्दः संप्रेष्य यथापूर्वं एतत्सेवामङ्गीकुर्वन्तु ।

इति प्रार्थयिता
ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री

# प्रकटनशुल्कविवरणम्

इयं गैर्वाणी प्रतिमासं विस्तृतया प्रचारमाप्नोति । धनिनां विदुषां सामान्य जनानां च आदरपात्रं भवति । न केवलमान्ध्रमद्रासराष्ट्रयोरेव, अपि तु सकलेपि भारतदेशे सिंहले च बहुप्रसिद्धा इयं प्रजादरपात्रं भवति ।

तस्मात् वणिजः पण्डिताः कवयः व्यवहारिणश्च वाणिज्यादिकान् अंशान् अत्र प्रकटयेयुर्यदि महान् लाभो भविष्यति ।

## प्रकटनशुल्कम्

सकृत्

| | |
|---|---|
| एकपृष्ठस्य | रू ३०—०० |
| अर्धपृष्ठस्य | रू १५—०० |
| पादपृष्ठस्य | रू ८—०० |
| पृष्ठाष्टमांशस्य | रू ४—०० |

चतसृषु संचिकासु

द्विगुणम्,

द्वादशसु संचिकासु

पञ्चगुणम्,

वर्णमुद्रणे सपादं शुल्कम्

— प्रकाशकः

## Names of Subscribers for Gairvani.

| | | | |
|---|---|---|---|
| 75. | V. Ramacharyulu M. A. B. T, Chittoor. | 1 | 50 |
| 76. | K. Narasimhachari ,, | 1 | 50 |
| 77. | Thulasi Reddy ,, | 1 | 50 |
| 78. | Vidyarthi Parishad, Gunturu. | 1 | 50 |
| 79. | Jyothissamslesha Vidyapeetam, Nadavaluru. | 1 | 50 |
| 80. | T. Mahadeva Sastry, Nagpattinam. | 1 | 50 |
| 81. | S. Narayana Iyyengar ,, | 1 | 50 |
| 82. | S. K. Srinivasachariar ,, | 1 | 50 |
| 83 | Dr. Lakshminarasimham ,, | 1 | 50 |
| 84. | C. Venkatramana Iyer, Chittoor. | 3 | 00 |
| 85. | Y. Seetharatnam, Aryamahila Samajam, Kuchipudi. | 1 | 50 |
| 86. | Headmaster, Z. P. Sanskrit School, Kothapolem, Nellore Dt. | 1 | 50 |
| 87. | P. Padmanabha Sastry, Vadigapalli. | 1 | 50 |
| 88. | K. H. Rao, Subhanpura. | 1 | 50 |
| 89. | D. R. Seshan, Ammiyur. | 1 | 50 |
| 90. | V. Ramanujacharya, Pudupetai. | 1 | 50 |
| 91. | Sanskrit Colleage, Nellore. | 1 | 50 |
| 92. | D. Pullayacharyulu, Jammalagedda. | 1 | 50 |
| 93. | G. Nagabhushanam, Peeleru | 1 | 50 |
| 94. | K. N. Raghunathan, Madras-33. | 2 | 00 |
| 95. | Y. Raghavacharyulu, Kurnool. | 1 | 50 |
| 96. | G. V. Rama Rao, Peeleru. | 1 | 50 |
| 97. | C. Jayaprada Devi ,, | 1 | 50 |
| 98. | G. Chengaiah ,, | 1 | 50 |
| 99. | B. Prahlad, Rajampet. | 1 | 50 |
| 100. | K. Satyanarayana Sarma, Bapatla. | 1 | 50 |
| 101. | M. Veeraraghava Sastry, Guntur. | 1 | 50 |
| 102. | H. Veuugopala Rao, Adoni. | 4 | 00 |
| 103. | S. Vidyasaraswathi, Periyakulam. | 1 | 50 |
| 104. | Principal, Andhrajateeyakalasala, Masulipatam. | 1 | 50 |
| 105. | Headmaster, Oriental High School, Masulipatam | 1 | 50 |
| 106. | Headmaster, Oriental Middle School, Ramanaidupet. | 1 | 50 |
| 107. | Headmaster, Hindu Colleage Hr. Sec. School, Ramanaidupet. | 1 | 50 |

शिष्टमागामिन्याम्

Register No. R. N. 8145/60.



[illegible]



कोशाध्यक्षः

# श्री. यम्. मुनिसुब्रह्मण्यश्रेष्ठी



Published by Sri N Ramanatha Iyer, B A., B. L., Advocate & Secretary,
S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.